बार आवृत्तिमें संपूर्ण मंत्र उपदेश करना चाहिये। तद्यथा। ॐभूः ॐभुवःॐस्वः ॐतत्सवितुर्वरेण्यम् ॥ प्रथमावृत्तौ ॥ ॐभूः ॐभुव- ॐस्वः ॐतत्सवितुर्वरेण्यं भर्गोदेवस्य धीमहीति द्वितीयावृत्तौ ॥ ॐभूः ॐभुवः ॐस्वः ॐतत्सवितुर्वरेण्यं । भर्गो देवस्य धीमहि । धियोयोनः प्रचोदयात् । आपोज्योति रसोमृतं ब्रह्म- भूर्भुवः स्वरोमिति ॥ यह क्रम गृह्यसूत्रमें लिखाहै ॥ पद्धतियोंमें संपूर्ण मंत्रकी त्रिरावृत्ति कराई जाती है।

( गायत्रीस्वरूपमाह )

ॐ३म् भूर्भुवः स्वंस्तत्संवितुर्वरेंण्यं भर्गो देवस्यं धीमहि। धियो योनः प्रचोदयात् ॐ ३ ॥

( तत् ) तस्य ( सवितुः ) जगदुत्पादयितुः सर्वान्तर्यामिणः सूर्यस्य ( वरेण्यं ) वरणीयं अतिश्रेष्ठमित्यर्थः ( भर्गः ) तेजः ( देवस्य ) द्योतनात्मकस्य दीप्यमानस्येत्यर्थः ( धीमहि ) वयं ध्यायामः ( चिंतयामः )- ( धियः ) धर्मादिविषयिणीर्बुद्धीः ( यः ) सविता ( नः अस्माकं ( प्रचोदयात् ) प्रेरयति ॥

अन्वयः—यः सविता प्रेरयिता नः अस्माकं धियः धर्मादिविषयबुद्धीः प्रचोदयात् तत् तस्य सवितुः प्रेर-

कस्य सूर्यस्य ( ब्रह्मणः ) देवस्य दीप्यमानस्य–( दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकांतिगतिषु– ) वरेण्यं वरणीयं भजनीयमिति भूरादिसप्तलोकप्रकाशकम् आपः स्वरूपं ज्योतिः स्वरूपं रसः आनंदस्वरूपम् अमृतं मोक्षरूपं ब्रह्मभूर्भुवः स्वरूपम् ॐकारस्वरूपं च भर्गः तेजः धीमहि ध्यायामः ॥

## ( संक्षिप्त-भाषार्थ )

जो सविता देवता हमारी चतुर्वर्ग ( धर्म अर्थ काम मोक्ष ) विषयवाली बुद्धिको शुभकामोंमें प्रेरणा करे उस जगत्के उत्पन्न करनेवाले द्योतमान प्रकाशमान ब्रह्मस्वरूप सूर्य भगवान्के अतिश्रेष्ठ सप्तलोक जल तेज रस ॐकाररूप भर्ग तेजको हम ध्यान करतेहैं ॥

भारद्वाजस्मृतौ गद्यपद्याभ्यां गायत्र्यर्थो दर्शितो यथा–
"अथाहमर्थं गायत्र्याः प्रवक्ष्यामि यथातथम् ॥
द्विजोत्तमानां सद्भक्त्या जपादीनि प्रकुर्वताम् ॥१॥
विश्वासभक्तिजननं मन्त्रैर्यज्ज्ञानमुत्तमम् ॥
तस्मादर्थं विजानीयाद्यत्नेन जपकृद्द्विजः ॥ २ ॥
द्वाभ्यां विश्वासभक्तिभ्यां जपादीनां महत्तरम् ॥
फलं भवेज्जपकृतामिति वेदेषु भाषितम् ॥ ३ ॥
पदानि दशमंत्रस्य तदादीनि यथाक्रमात् ॥
पदं प्रत्यर्थनिष्पत्तिः स्पष्टं तु क्रियतेऽधुना ॥४ ॥"

(तत् १) इति द्वितीयैकवचनम्। अनेकजगदुत्पत्तिस्थितिलयकारणीभूतमुपकथ्यमानं निरुपमं तेजः सूर्यमण्डलाभिधेयं परं ब्रह्माभिधीयते।सवितुरिति२षष्ठ्येकवचनम्। पूञ्प्राणिप्रसवे इत्यस्य धातोरेतद्रूपम्। सर्वस्य भूतजातस्य प्रसवितुरित्यर्थः॥वरेण्यं ३ वरणीयं प्रार्थनीयं नियमादिभिरपगतकल्मषैः सततं ध्येयम्। भर्गः४भञ्जो आमर्दने भृजि भर्जन इत्येतयोर्धात्वोर्भजतां पापभञ्जनहेतुभूतम्। अथवा भ्राज दीप्तावित्यस्य धातो भर्गः तेज इत्यर्थः। देवस्य ५ वृष्टिदानादिगुणयुक्तस्य निरतिशयस्येत्यर्थः। दीव्यतेः प्रकाशार्थत्वात्। धीमहि ६ मध्ये चिंतयामि निगमनिरुक्तविद्यारूपेण चक्षुषा योसावादित्यो हिरण्मयः पुरुषः सोहमिति चिन्तयामि। धियः ७ इति द्वितीया बहुवचनम्॥ य इति ८ छान्दसत्वाल्लिंगव्यत्ययः। यत्तेजः सवितुर्देवस्य वरेण्यमस्माभिरभिध्यातम् भर्गो जपतां पापभञ्जन हेतुभूतं धीमह्युपास्महे। तत्तेजो नोऽ ९ स्माकंधियो १० बुद्धीः श्रेयस्करेषु कर्मसु प्रचोदयात् प्रेरयेदित्यर्थः॥

"एषाव्याख्या तु गायत्र्याः सर्वपापप्रणाशिनी।
विज्ञातव्या प्रयत्नेन द्विजैः सर्वशुभेच्छुभिः॥
जपस्याभ्यंतरे व्याख्या स्मर्तव्या मनसा द्विजैः।
स्मरणात्सर्वपापानि प्रणश्यंति न संशयः॥"

अथ प्रत्यक्षरं देवताभेदमाह योगियाज्ञवल्क्यः ॥ अक्षराणां तु दैवत्यं संप्रवक्ष्याम्यतः परम् । आग्नेयं (तत्) प्रथमं ज्ञेयं वायव्यं (स) द्वितीयकम् ॥ तृतीयं (वि) सूर्य दैवत्यं चतुर्थं (तु) वैद्युतं तथा ॥ पञ्चमं (व) यमदैवत्यं वारुणं (रे) षष्ठमुच्यते । बार्हस्पत्यं सप्तमं तु (ण) पार्जन्यमष्टमं (यम्) विदुः । ऐन्द्रं तु नवमं (भ) ज्ञेयं गांधर्वं दशमं (र्गोः) तथा । पौष्ण मेकादशं (दे) प्रोक्तं मैत्रावरुणं (व) द्वादशम् । त्वाष्ट्रं त्रयोदशं (स्य) ज्ञेयं वासवं तु चतुर्दशम् (धी) मारुतं पंचदशकं (म) सौम्यं षोडशकं (हि) स्मृतम् । सप्तदशं (धि) त्वाङ्गिरसंवैश्वदेवमतः परम् । (यः) आश्विनं चैकोनविंशं (यः) प्राजापत्यं तु विंशकम् । (नः) सर्व देवमयं प्रोक्तमेकविंश (प्र) मतः परम् ॥ रौद्रंद्वाविंशकं (चो) प्रोक्तंत्रयोविंशन्तु (द) ब्राह्मकम् । वैष्णवं (यात्) चतुर्विंशमेता ह्यक्षरदेवताः । जपकाले तु संस्मृत्य तासां सायुज्यतां व्रजेत् ॥

( विशेष द्रष्टव्य )

शंका करतेहैं कि छंदश्शास्त्रमें षट् ६ अक्षरके पाद वाला गायत्री छंद लिखाहै । यथा वृत्तरत्नाकरे--उक्ता त्युक्ता तथा मध्या प्रतिष्ठान्यासपूर्विका । गायत्र्युष्णिगनुष्टुप्च बृहती पंक्तिरेव च ॥ त्रिष्टुप् च जगतीचेव

तथातिजगती मता। शाकरी सातिपूर्वास्यादष्टय त्यष्टी ततः परम्॥धृतिश्चातिधृतिश्चैव कृतिः प्रकृतिरा कृतिः। विकृतिःसंस्कृतिश्चापि तथातिकृतिरुत्कृतिः॥ इत्युक्ता छंदसां संख्येति॥ अर्थ--उक्ता छंद। एक १ अक्षरके पादका है। अत्युक्ता २--अक्षरोंके पादका। मध्याछन्द ३--अक्षरोंके पादका। प्रतिष्ठा ४--अक्षरोंके पादका। सुप्रतिष्ठा ५--अक्षरोंके पादका। गायत्री छन्द-- ६--अक्षरोंके पादका। उष्णिक् ७--अक्षरोंके पादका इत्यादि २७ अक्षरतकक्रमपूर्वक छन्दोंके पाद होतेहैं इसलिये चारही वेदोंमें षट् अक्षर पाद वाले गायत्री नामसे बहुत छंद हैं तो इसमंत्रका उपदेश किया जाता है उत्तर यह है कि ( पंकज ) --पंकाज्जायते इति. पंकजम् अर्थ--जो पंक ( कीचड) से उत्पन्न हो उसको पंकज कहतेहैं यद्यपि पंकसे कुमुद ( कंमीया ) नापे- रोड इत्यादि अनेक वस्तु उत्पन्न होतीहैं तोभी पंकज शब्द कमलकाही रूढि प्रसिद्धिका वाचक है इसप्रकार यद्यपि गायत्री छंद अनेक हैं तथापि रूढि प्रसिद्धिसे गायत्री छंद इस मंत्रकाही बोधक है और इस मंत्रको ही सर्व सिद्धि भुक्तिमुक्तिदायक प्राणरक्षक होनेसे उपदेश कियाजाताहै। प्रमाण व्यासो यथा--"गायन्तं त्रायते यस्मात् गायत्रीयं ततः स्मृता" इति॥ इसलिये इस

गायत्री मंत्रकीही, अति प्रशंसा ( स्तुति ) फल महात्मा योगी याज्ञवल्क्य जी लिखतेहैं--

प्रमाण ।

गायत्री चैव वेदांश्च तुलया समतोलयत् ।
वेदा एकत्र सांगास्तु गायत्री चैकतः स्थिता ॥
सारभूतास्तु वेदानां गुह्योपनिषदो मताः ।
ताभ्यः सारस्तु गायत्री तिस्रो व्याहृतयस्तथा ॥
ॐकारपूर्विकास्तिस्रो गायत्रीं यश्च विन्दति ।
चरितं ब्रह्मचर्यस्य स वै श्रोत्रिय उच्यते ॥
एतया ज्ञातया सर्वं वाङ्मयं विदितं भवेत् ।
उपासितं भवेत्तेन विश्वं भुवनसप्तकम् ॥
एवं यस्तु विजानाति गायत्रीं ब्राह्मणस्तु सः ।
अन्यथा शूद्रधर्मा स्याद्वेदानामपि पारगः ॥

तथाच ऋष्यशृंगः ।

सर्वात्मना हि या देवी सर्वभूतेषु संस्थिता ।
गायत्री मोक्षहेतुर्वै मोक्षस्थानमलक्षणम् ॥

कूर्मपुराणे ।

गायत्री देवजननी गायत्री पापनाशिनी ।
न गायत्र्याः परं जप्यमेतद्विज्ञानमुच्यते ॥
गायत्री वेदजननी गायत्री पापनाशिनी ।
गायत्र्यास्तु परं नास्ति दिवि चेह च पावनम् ॥

इस्तप्राणप्रदा देवी पततां नरकार्णवे ।
तस्मात्तामभ्यसेन्नित्यं ब्राह्मणो हृदये शुचिः ॥

ऐसा गायत्रीका फल निरूपण कर अब इसका जो अर्थ बृहदारण्यकमें लिखाहै वह लिखतेहैं ( बृहदारण्यके ) भूमिरन्तरिक्षं द्यौरित्यष्टावक्षराणि अष्टाक्षरं हवा एकं गायत्र्यै पदमेतदुहैवास्या एतत् सयावदेषु लोकेषु तावद्ध जयति योऽस्या एतदेवं पदं वेद ॥ १ ॥ ऋचो-यजूंषि सामानि इति अष्टावक्षराणि अष्टाक्षरं वा एकं गायत्र्यै पदमेतदुहैवास्या एतत् स यावतीयं त्रयी विद्या तावद्ध जयति योऽस्या एतदेवं पदं वेद ॥२॥ प्राणोऽपानो व्यान ( विआनः ) इत्यष्टावक्षराणि अष्टा-क्षरं हवा एकं गायत्र्यै पदमेतदुहै वास्या एतत् सयाव-दिदं प्राणिति तद्धै जयति योऽस्या एतदेवं पदं वेद ॥ ॥ ३ ॥ अथास्या एतदेव तुरीयं दर्शतं पदं परोरजाय एष तपति यद्वै चतुर्थं तत्तुरीयं दर्शतं पदमिति ददृशे इव एष परोरजा इति सर्वं ह्येष रज पर्य्युपरि तपति एवं हैष श्रिया यशसा तपति योऽस्या एतदेवं पदं वेद ॥ ४ ॥ सैषा गायत्री एतस्मिंस्तुरीये दर्शते पदे परो-रजसि प्रतिष्ठितेत्यादि ॥५॥ एतद्वैतत् सत्यं बले प्रति-ष्ठितं प्राणो वै बलंतत् प्राणे प्रतिष्ठितमित्यादि ॥ साहैषा गयांस्तत्रे प्राणा वै गयास्तान् प्राणांस्तत्रे

यस्माद्गयांस्तत्रे तस्माद् गायत्री नाम ॥ ६ ॥ सयामे वासुमन्वाह वेपसो स यस्मा अन्वाह तस्य प्राणां स्त्रायते ॥ ७ ॥

अथ छांदोग्योपनिषदुक्तगायत्रीव्याख्यालिखते हैं॥ गायत्री वा इदं सर्वंभूतं यदिदंकिञ्च । वाग्वै गायत्री वाग्वा इदं सर्व्वं भूतं गायति च त्रायते च ॥ १ ॥ यावै सा गायत्रीयं वाव सा येयं पृथिवी अस्यांहीदं सर्व्वं भूतं प्रतिष्ठितम् एतामेव नातिशीयंते ॥ २॥ यावै सा पृथिवीयं वाव सा यदिदमस्मिन् पुरुषे शरीरं अस्मिन् हीमे प्राणा प्रतिष्ठिता एतदेव नातिशयन्ते ॥ ३ ॥ यद्वै तत् पुरुषे शरीरमिदं वाव तद्यदिदम स्मिन्नन्तः पुरुषे हृदमस्मिन् हीमे प्राणाः प्रतिष्ठिताः एतदेव नाति शीयन्ते ॥ ४ ॥ सैषा चतुष्पदा षड्विधा गायत्री तदेतदृचाभ्यनूक्तम् ॥ ५ ॥

ऋ० एतावानस्य महिमातोज्यायाँश्च पूरुषः । पादो ऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवि ॥ यजुर्वेदमें अध्याय ३१ में एतावान् यह विशेष है ॥

अस्य शांकरभाष्यम् ।

तावान् अस्य गायत्र्याख्यस्य ब्रह्मणः समस्तस्य महिमा विभूतिविस्तारः यावान् चतुष्पाद्षड्विधश्च ब्रह्मणो विकारः पादः गायत्रीति व्याख्यातः । अतस्त

स्माद्विकारलक्षणात् गायत्र्याख्यात् ततो ज्यायान् मह त्तरश्च परमार्थसत्यरूपोऽविकारः पुरुषः सर्वपूरणात् पुरिशयनाच्च ॥ तस्यास्य पादाः सर्वाः सर्वाणि भूतानि तेजोबन्नादीनि सस्थावरजङ्गमानि ॥ त्रिपाद् त्रयः पादा अस्य सोऽयं त्रिपाद् अमृतं पुरुष्याख्यं समस्तस्य गायत्र्यात्मकस्य दिवि द्योतनवति स्वात्मन्यवस्थित मित्यर्थः ॥

अथ महीधरभाष्योक्तगायत्रीका अर्थ लिखते हैं । यजु० अ० महीधरः ॥ तदिति षष्ठ्यर्थे । तस्य द्यो-तनात्मकस्य सवितुः प्रेरकस्यान्तर्यामिणो विज्ञानान न्दस्वभावस्य हिरण्यगर्भोपाध्यवच्छिन्नस्य वा आदि-त्यान्तरपुरुषस्य वा ब्रह्मणो वरेण्यं वरणीयं सर्वैःप्रार्थनीयं भर्गो सर्वपापानां सर्वसंसारस्य च भजनसमर्थं च तेजः सत्यज्ञानादिवेदान्तप्रतिपाद्यं वयं धीमहि ध्यायाम इति महीधरभाष्यम् ॥

तत् यह षष्ठीके अर्थमें है ॥ उस ( देव ) प्रकाशस्व-रूप (सविता) प्रेरक अन्तर्यामि विज्ञान और आनंदस्व भावका अर्थात् हिरण्यगर्भनामसे युक्तका अथवा सूर्य-मण्डलके मध्यमें स्थितपुरुषका अथवा ब्रह्मका(वरेण्य) सर्वसे प्रार्थना करने योग्य ( भर्ग ) सब पापोंके सब संसारके भूंजनेमें नाशकरनेमें समर्थ तेजको अर्थात्

'सत्यं ज्ञानमनंतं ब्रह्म' इत्यादि श्रुतिसे सिद्धकिये गये को हम ध्यान करते हैं ॥

अथ गायत्रीपर सायनभाष्य लिखते हैं–

यः सविता देवः नः अस्माकं धियः धर्मादिविषयाबुद्धीः प्रचोदयात् प्रेरयेत् तत् तस्य सर्वासु श्रुतिषु प्रसिद्धस्य देवस्य द्योतमानस्य सवितुः सर्वान्तर्यामितया प्रेरकस्य जगत्स्रष्टुः परमेश्वरस्य आत्मभूतं वरेण्यं सर्वैरुपास्यतया ज्ञेयतया च सम्भजनीयं भर्गः अविद्या तत् कार्ययोर्भर्जनाद्भर्गः स्वयंज्योतिः परब्रह्मात्मकं तेजः धीमहि ॥

( अर्थ भाषामें )

जो सविता देव हम लोगोंकी बुद्धिको अर्थात् धर्मादिविषयबुद्धिको प्रेरणा करे उस सब श्रुतियोंमें प्रसिद्ध प्रकाशमान सविता अर्थात् सबके अंतर्यामी होकर प्रेरक जगत्के उत्पन्न करनेवाले परमेश्वरका आत्मस्वरूप वरेण्य अर्थात् सबोंसे उपासना करनेके योग्य और भजन करनेके योग्य भर्गको अर्थात् अविद्या अज्ञान और उसके कार्य संसारके भूंजनेसे नाश करनेसे भर्गपद वाच्य स्वयं प्रकाश परब्रह्मरूप जो तेज उसका ध्यान करताहूं ॥

अथवा ।

यद्वा यः सविता सूर्य्यो धियः । कर्माणि प्रचोदयात्

प्रेरयेत् तस्य सवितुस्सर्वस्य प्रसवितुर्देवस्य द्योतमानस्य सर्वैर्दृश्यतया प्रसिद्धं वरेण्यं सर्वैः संभजनीयं भर्गः पापानां तापकं तेजः धीमहि ध्येयतया मनसा धारयेम ॥ इति माधवाचार्यः ॥

(अर्थ भाषामें ।)

जो ( सविता ) सूर्य हमलोगोंकी बुद्धि अर्थात् कर्मों को प्रेरणा करे उस ( सविता ) सबके उत्पन्न करनेवाले ( देव ) प्रकाशमानका सबको दीख पडताहै उससे प्रसिद्ध ( वरेण्य ) सबसे भजनकरनेके योग्य ( भर्ग ) पापोंका नाश करनेवाले तेजका ध्यान करते हैं अर्थात् मन धारण करते हैं ॥

अब श्रीयोगियाज्ञवल्क्यजीने जो गायत्रीका अर्थ लिखाहै सो वह लिखते हैं ( तत् ) तच्छब्देन तु यच्छब्दो बोद्धव्यः सततं बुधैः । उदाहृते तु यच्छब्दे तच्छब्दः स्यादुदाहृतः ( सवितुः ) सविता सर्वभूतानां सर्वभावान् प्रसूयते । सवनात्पावनाच्चैव सविता तेन चोच्यते ॥ ( देवस्य ) दीव्यते क्रीडते यस्माद्रुच्यते शोभते दिवि । तस्माद्देव इति प्रोक्तः स्तूयते सर्वदैवतैः ॥ (प्रचोदयात् ) यो नः (भर्गः) चिन्तयामो वयं भर्गं धियो यो नः प्रचोदयात् । धर्मार्थकाममोक्षेषु बुद्धिवृत्तीः पुनः पुनः ॥ ( भर्गः ) भ्रस्ज् पाके भवेद्धातुर्यस्मात्पा-

चयतेह्यसौ । भ्राजते दीप्यते यस्माज्जगच्चान्ते हरत्यपि ( भर्गः ) कालाग्निरूपमास्थाय सप्तार्चिः सप्तरश्मिभिः । भ्राजते तत्स्वरूपेण तस्माद्भर्गः स उच्यते ॥ ( भर्गः ) भेति भ्राजयते लोकान्रेति रंजयते प्रजाः । गइत्यागच्छ तेऽजस्रं भरगो भर्ग उच्यते ॥ ( वरेण्यं ) वरेण्यं वरणीयं च जन्मसंसारभीरुभिः । आदित्यान्तर्गतं यच्च भर्गाख्यं वै मुमुक्षुभिः ॥ ( धीमहि ) जन्ममृत्युविनाशाय दुःखस्य त्रिविधस्य च । ध्यानेन पुरुषो यस्तु द्रष्टव्यः सूर्यमण्डले॥

सप्तव्याहृतयः ।

भूराद्याश्चैव सत्यांताः सप्तव्याहृतयस्तथा । लोकास्त एव सप्तैते उपर्युपरि संस्थिताः ॥ सप्तव्याहृतयः प्रोक्ताः पुराकल्पे स्वयंभुवा । ता एव सप्तच्छंदांसि लोकाः सप्त प्रकीर्तिताः ॥

अथ भूराह ।

भवंति चास्मिन् भूतानि स्थावराणि चराणि च । तस्माद्भूरिति विज्ञेया प्रथमा व्याहृतिः स्मृता (भुवः)॥

अथ भुवराह ।

भवंति भूयो लोकानि उपयोगक्षये पुनः । कल्पन्ते उपभोगाय भुवस्तस्मात्प्रकीर्तिता ॥ ( भुवः ) ॥

अथ स्वराह ।

शीतोष्णवृष्टितेजांसि जायंते तानि वै सदा॥आलयः

सुकृतानां च स्वर्लोकः स उदाहृतः ॥ ( स्वः ) ॥

अथ महराह ।

अधरोन्तरलोकेभ्यो महांश्च परिमाणतः ।
हृदयंसप्तलोकानां महस्तेन निगद्यते ॥ ( महः ) ॥

अथ जनमाह ।

कल्पदाहे प्रलीनास्तु प्राणिनस्तु पुनः पुनः ।
जायंते च पुनः स्वर्गे जनस्तेन प्रकीर्तितः ॥ (जनः) ॥

अथ तप आह ।

सनकाद्यास्तपः सिद्धा ये चान्ये ब्रह्मणः सुताः ।
अधिकारनिवृत्तास्तु तिष्ठंत्यस्मिंस्तपस्ततः ॥( तपः) ॥

अथ सत्यमाह ।

सत्यं तु सप्तलोका वै ब्रह्मणः सदनं ततः ॥ सर्वेषां चैव लोकानां मूर्ध्नि सन्तिष्ठते सदा ॥ ज्ञानकर्मप्रतिष्ठानां तथा सत्यस्य भाषणात् । प्राप्यते चोपभोगार्थं प्राप्यं न च्यवते पुनः ॥ तत्सत्यं सप्तमो लोकस्तस्मादूर्ध्वं न विद्यते ॥ ( सत्यम् ) ॥

अर्थ गायत्रीमंत्रकी व्याख्या यथाबुद्धि वेदवेदांगधर्मशास्त्रादिद्वारा सिद्धकर विनियोगका वर्णनकरते हैं ॥ जिसमंत्रका जपकरनाहो उसका प्रथम ऋषि छंद देवताका यथार्थ ज्ञान चाहिये ॥ प्रमाण. योगियाज्ञवल्क्यका " आर्षं छंदश्च दैवत्यं विनियोगस्तथैव च ॥ वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः" ॥ अर्थ--मंत्रका

ऋषि छंद देवता विनियोग यह प्रयत्नसे जानना चाहिये। और ना जाननेमें प्रायश्चित्त लिखाहै "अविदित्वातुयः कुर्याद्याजनाध्यापनं जपम् । होममंतर्जलादीनि तेभ्यो ऽल्पाल्पफलं लभेत्" तथा च कात्यायनः–द्रष्टार ऋषयः स्मर्तारः परमेष्ठ्यादयः; देवतामन्त्रान्तर्भूता अग्न्यादिका हविर्भाजः स्तुतिभाजोवा । छन्दांसि गायत्र्यादीनि। एतान्यविदित्वायोऽधीतेऽनुब्रूते जपति जुहोति यजते याजते वा तस्य ब्रह्म निर्वीर्य्यं यातयामं भवत्यन्तरा सुगतं वापद्यते स्थाणुं वर्च्छति प्रमीयते वापापीयान् भवति । इसलिये गायत्रीछंदका ऋषि देवता विनियोग लिखतेहैं ॥ तथा च योगियाज्ञवल्क्यः ॥

सविता देवता तस्या मुखमग्निस्तदित्युत । विश्वामित्रऋषिश्छन्दो गायत्री तु विधीयते ॥ विश्वस्य जगतो मित्रं विश्वामित्रः प्रजापतिः ॥ विनियोगोपनयने प्राणायामे जपे तथा ॥

अर्थ ।

गायत्रीका विश्वामित्र ऋषि सविता देवता अग्नि मुख उपनयनमें विनियुक्त है ॥ श्रीः । अलमतिगाहावगाहेन ॥ श्रीः ॥

एषा व्याख्या तु गायत्र्याः सर्वपापप्रणाशिनी।विज्ञातव्या प्रयत्नेन द्विजैः सर्वशुभेप्सुभिः ॥ जपस्याभ्यंतरे

ाख्या स्मर्तव्यामनसा द्विजैः । स्मरणात्सर्वपापानि
नश्यंति न संशयः ॥ इति ॥

अथ माणवक आचार्यदक्षिणदिशि
अग्निपश्चिमोपविष्टो घृताक्तशुष्कनिपि
द्धेतरैंधनेन जुहुयात् ॥ ततः ॐअग्नेसु
श्रवः सुश्रवसंमांकुरु ॐयथात्वमग्नेसु
श्रवः सुश्रवा असि । ॐएवंमा॰सुश्रवः
सौश्रवसंकुरु ॐयथात्वमग्ने देवानां यज्ञ
स्य निधिपोऽसि । ॐएवमहं मनुष्या
णां वेदस्यनिधिपोभूयासम् ॥ ततः प्रद
क्षिणमग्निंवारिणा पर्युक्ष्य उत्थाय स्वप्रा
देशमितांघृताक्तपलाशसमिधमादाय॥
ॐअग्नयेसमिधमाहार्षं बृहतेजातवेदसे
यथात्वमग्ने समिधासमिध्यसएवमह
मायुषामेधया वर्चसा प्रजया पशुभिर्ब्र-
ह्मवर्चसेनसमिंधे जीवपुत्रो ममाचार्यो
मेधाव्यहमसान्यनिराकरिष्णुर्यशस्वी
तेजस्वी ब्रह्मवर्चस्व्यन्नादोभूयास॰स्वा
हा ॥ इतिमंत्रेणजुहुयात् ॥

अथ गायत्र्युपदेशके अनंतर आचार्यसे दक्षिण अग्निसे पश्चिमस्थित हुआ शिष्य घृतयुक्त शास्त्रविहितगोमय (एरने) से हवन करे [ मंत्रार्थ—अग्ने सुश्रव इति ] सुश्रव शोभन नाम युक्तहै अग्नि देव ( मा मां ) मुझको सुश्रव श्रेष्ठकर्णोंवाले करो जैसे तुम सुश्रव हो तद्वत् सुन्दर श्रवणसे उत्पन्न ज्ञानशाली करो। हे भांडागारिके गृहमेधीय अग्ने जैसे तुम यज्ञ संबंधसे इंद्रादि देवताओंके निधिप अर्थात् रक्षक हो(अर्थात् भाण्डागारिकहो ) इसीप्रकार ( अहं ) मैं मनुष्योंका और वेदोंका निधिप रक्षक हूंगा इति ॥ तिसके अनंतर प्रदक्षिण क्रमसे जलसे अग्निको पर्युक्षण करे और उठकर ( स्व ) अपने प्रादेशमात्र घृतयुक्त समिधा लेकर (अग्नये)इस मंत्रसे हवन करे[मंत्रार्थ—अग्नये इति ]हे अग्ने मैं समिधाको (आहार्षम्) आहृतवानस्मि ग्रहणकर्ता रहे अतिशयसे प्रकाशमान तुम्हारे लिये हे अग्ने जैसे तुम मुझकर दीहुई समिधासे वृद्धिको प्राप्त होतेहो इसी प्रकार मैं आयु( चिरजीवन ) मेधा अर्थात् धारणशक्तिवाली बुद्धि ( वर्च ) तेजसे ( प्रजया ) प्रजा पुत्रादिसे ( पशुभिः ) गवादिकोंसे ( ब्रह्मवर्चसा ) ब्रह्मतेजसे वृद्धिको प्राप्त हूंगा और मुझको गुरुजी बहुत पुत्र बुद्धियुक्त होवें॥ ( अहं अनिराकरिष्णुः भवामि) अर्थात् मैं नित्ययज्ञके करनेवाला हूंगा। और मैं यशयुक्त तेज-

वाला वेदाध्ययनशील और ( अन्नाद ) अर्थात् अन्नके देनेवाला और भोजन करनेवाला हूंगा अर्थात् अन्नका वियोग हमारेको कभी नहो इस कामनासे अग्निके लिये स्वर्गत हो ॥

एवंसमिदंतरद्वयंजुहुयात् ॐ अग्नेसुश्रवः सुश्रवसंमाकुरु ॐ यथात्वमग्नेसुश्रवः सुश्रवाअसि । ॐ एवंमांसुश्रवः सौश्रवसंकुरु । ॐ यथात्वमग्ने देवानां यज्ञस्यनिधिपोऽअसि । ॐ एवमहंमनुष्याणां वेदस्यनिधिपोभूयासम् । ततःप्रदक्षिणमग्निपर्युक्ष्यतूष्णीं पाणी प्रतप्य मुखंप्रतिमंत्रांतेऽवमृशति॥ॐतनूपाअग्नेसि तन्वंमे पाहि । ॐआयुर्दा अग्नेस्यायुर्मे देहि । ॐवर्चोदाअग्नेसिवर्चोमेदेहि । ॐ अग्नेयन्मेतन्वाऊनं तन्म आपृण। ॐमेधांमेदेवः सविता आदधातु । ॐमेधांमे देवीसरस्वतीआदधातु । ॐमेधामश्विनौदेवावाधत्तांपुष्करस्रजौ । ततः सर्वगात्रादिषु दक्षिणपाणिनास्पर्शः ॥

इसी प्रकार दोसमिधाका हवन करे ॥ अग्ने सुश्रवः इस मंत्रका पूर्व अर्थ लिखाहै ॥ तदनंतर प्रदक्षिण क्रमसे अग्नि पर्युक्षणकर तृष्णीं हो हाथको तपाय मंत्र के अनंतर स्पर्शकरे ॥ ( मंत्रार्थ तनूपा इत्यादि ) हे अग्ने ! तुम तनु-शरीरके रक्षक हो इसलिये हमारे शरीरकी रक्षा करो अर्थात पुष्टि करो हे अग्ने आयुके तुम दाता हो इसलिये आयुकी वृद्धि करो हे अग्ने वर्च तेजके दाता तुम तेजको देवो ॥ हे अग्ने जो मेरे शरीरमें ऊन ( न्यून ) है वह पूर्ण करो ॥ धारणशक्ति-वाली बुद्धि(सविता) सूर्य मुझको देवे । सरस्वती वाग-धिष्ठात्री देवता बुद्धिको देवे ॥ कमलोंकी मालावाले अश्विनी कुमार बुद्धिको देवें ॥ तदनंतर अंगोंको दक्षि-ण हाथसे स्पर्श करना क्रमसे ॥

ॐअंगानिचम आप्यायताम् ॥इतिसर्व गात्रालंभने ॐवाक्चम आप्यायतामि तिमुखे॥ॐप्राणश्चम आप्यायतामिति नासिकयोः ॥ ॐचक्षुश्चम आप्यायता मिति मंत्रपाठमात्रम्॥ततोदक्षिणकराना मिकाग्रगृहीतभस्मना ललाटग्रीवायांद क्षिणबाहुमूलेहृदिचत्र्यायुषंकुर्य्यात् ॥ मंत्रोयथा—ॐ त्र्यायुषंजमदग्नेः—इतिल

लाटे। ॐकश्यपस्यत्र्यायुषमितिग्रीवायाम्। ॐयद्देवेषुत्र्यायुषं-इतिदक्षिणबाहुमूले। ॐतन्नोऽअस्तुत्र्यायुषम्-इतिहृदये॥ ततोव्यस्तपाणिभ्यां पृथिवींस्पृशन्नभिवादनंकुर्यात्॥तत्रप्रकारः॥ ॐअमुकगोत्रोहममुकशर्माहंभोवैश्वानर त्वामभिवादये॥ ततस्तेनैवक्रमेणसंबोध्यवरुणमभिवाद्याचार्यंतथैवाभिवादयेत्। ततःआयुष्मान्भवसौम्येत्याचार्योब्रूयात्॥

अंगानि शरीरके अंग और वाक् वाणीका कारक इंद्रिय प्राण वायु चक्षु नेत्र श्रोत्र कर्ण यश बलमें मेरे वृद्धिको प्राप्त होवें॥ इन मंत्रसे सर्व शरीर १ मुख २ नासिका ३ चक्षु ४ श्रोत्र-कर्ण ५ स्पर्श करने यशो बलं यह केवल उच्चारणमात्रहै॥ तदनंतर दक्षिण हस्तकी अनामिकासे हवनकी भस्म ले प्रथम ललाट फिर ग्रीवा और दक्षिण अंशमें त्र्यायुषं इस मंत्रसे लगावे [मंत्रार्थ-त्र्यायुषमिति]त्रिआयुकी एक्यताकोत्र्यायुष कहाहै वह त्र्यायुष अर्थात् कल्याणदायकशुभसूचक जो जमदग्निनाम ऋषिको और कश्यपजीको और इंद्रादिक देवताओंको होती भई वह त्र्यायुष मुझको होवे इति तदनंतर व्यस्त (उलटे) हाथोंसे पृथिवीको स्पर्श

करताहुआ अभिवादन करे—कि, अमुकगोत्र अमुक प्रवर अमुक शर्मा में हे वैश्वानर अग्ने तुमको अभिवादन करताहूँ इसीप्रकार वरुण ( जलाधिष्ठातृदेवता ) को तदनंतर गुरुजीको प्लुतउच्चारणसे अभिवादन करे । आयुवाला हो यह गुरु आशीर्वाद कहे ॥

ततोभिक्षापात्रमादाय प्रथमं मातुःसकाशात् ॐभवति भिक्षां मे देहि—इतिप्रार्थनानंतरं तद्दत्तां चादायाचार्याय निवेदयेत् तथैव भिक्षांतरं याचयेत् । तत आचार्येण भुंक्ष्वेत्यनुज्ञातो भिक्षां स्वीकुर्यात् । ततः फलपुष्पचंदनघृतपूर्णस्रुवेण ब्रह्मचारिदक्षिणकरपृष्ठेनाचार्यः पूर्णाहुतिं दद्यात् ॥ तत्रमंत्रः ॥ ( यजु० अध्याय ७ मंत्र २४ ) ॐ मूर्द्धानंदिवो अरतिं पृथिव्या वैश्वानरमृतऽआजातमग्निम् । कवि᳖सम्राजमतिथिंजनानामासन्नापात्रं जनयंत देवाः स्वाहा—इदमग्नये० ततः स्रुवेणभस्मानीय दक्षिणानामिकाग्रगृहीतभस्मना ( १ ) ॐ त्र्यायु

षंजमदग्नेःइतिललाटे—ॐकश्यपस्य त्र्या युषम्-इतिग्रीवायाम्।ॐयद्देवेषु त्र्यायुषम् इति दक्षिणबाहुमूले।ॐ तन्नोऽअस्तुत्र्या युषम् । इतिहृदि । कुमारपक्षे तन्नो इत्य स्य स्थाने तत्तेइतिविशेषः ॥ अथक्षार लवणमधुमांसादिनिवृत्तिः । उद्धृतजल स्नानदंडकृष्णाजिनधारणवृक्षारोहणवि षमभूमिलंघननग्नस्त्रीनिरीक्षणस्त्रीसंभोग व्यसनव्यावृत्तिरूपा ब्रह्मचारिणो निय- माःतद्दिनेवाग्यतो ब्रह्मचारी अहः शेषं स्थित एव गमयेत् । ततः सायंसंध्यां कृत्वा तस्मिन्नेवाग्नौ पूर्ववत् पर्युक्षणपरि समूहने कृत्वा वाचं विसृजेत्। परिसमू हनांते शुष्कनिषिद्धेतरेंधनस्याग्नौप्रक्षे पः । ततः संध्यामुपास्य प्रतिदिनं सायं प्रातरपि ब्रह्मचारिणा कर्तव्या इति ॥

तदनंतर भिक्षापात्रको ग्रहण कर प्रथम मातासे ब्रह्मचारी भिक्षा लेवे । तदनंतर अन्यस्त्रियोंसे ॥ यदि ब्राह्मण ब्रह्मचारी हो तो (भवति भिक्षां देहि )

यह कहे अर्थात भवत् शब्दको प्रथम कहे । यदि क्षत्रिय. ब्रह्मचारी हो तो (भिक्षां भवति देहि ) यह कहे. अर्थात् भवति शब्द मध्यमें कहे । यदि वैश्य ब्रह्मचारीहो तो (भिक्षां देहि भवति ) यहकहे अर्थात् भवति शब्द अंतमें कहे ॥ प्रमा०,भी यथा गृह्य सूत्र २ कांडमें-( भवत्पूर्वां ब्राह्मणो भिक्षेत् भवन्मध्यां राजन्यो भवदन्त्यां वैश्य इति )और याज्ञवल्क्य स्मृति अध्याय प्रथममें लिखाहै ॥ "आदिमध्यावसानेषु भवच्छब्दोपलक्षितम् । ब्राह्मणेषु चरेत् भैक्ष्यमनिन्द्येष्वात्मवृत्तये " अर्थ-आदिमध्यअंतमें ब्राह्मण क्षत्रिय वैश्य भवत् शब्दको देकर ब्रह्मचारी भिक्षाकरे अनिन्द्य ब्राह्मणोंके गृहोंसे ॥ अपनी अन्नपूर्तिकेलिये प्रथम भिक्षा लेकर गुरुजीके आगे धरदे ॥ तदनंतर गुरुजीकी आज्ञासे भिक्षाको ग्रहण करे॥इसमें प्रमाण याज्ञवल्क्य-स्मृति अध्याय १ प्रथम-यथा- "कृताग्निकार्यो भुंजीत वाग्यतो गुर्वनुज्ञया" अर्थात् हवन कर गुरुकी आज्ञा ले तूष्णीं होकर भोजन करे॥ तदनंतर फल पुष्प चंदन घृतसे पूर्ण ब्रह्मचारीका दक्षिण हाथ अपने हाथसे स्पर्शकर स्रुवसे आचार्य पूर्णाहुतिको हवन करताहै मूर्धानं इस मंत्रसे ( मंत्रार्थ मूर्द्धानमिति ) इस मंत्रका भरद्वाज ऋषि वैश्वानर

देवता त्रिष्टुप् छंद पूर्णाहुतिके होममें विनियुक्तहै ॥ अर्थ–स्वर्गादि लोकसे ऊपर पृथिव्यादि पांचभूत अर्थात् पृथिवी--अप–तेज–वायु-आकाश-इनसे विरक्त ब्रह्माण्डको प्रकाश करनेवाला ईश्वर सत्यरूप जन्मादि षड्भावरहित निर्विकार,प्रकाशमान सर्वज्ञ परमानंद तीन कालसे रहित सृष्टि–( उत्पत्ति ) लयमें प्राणिमात्रका पात्रभूत और जो देवताओंको उत्पन्न कर अपने २ व्यापारमें लगाताहै तिस परमेश्वरके लिये यह आहुति सुहुत हो ॥ तदनंतर बैठकर स्रुवसे भस्मको ले दक्षिण अनामिकासे ललाट १ ग्रीवा २ दक्षिण बाहु ३ हृदयमें आचार्य लगाकर पीछेसे यथाक्रम शिष्यके (त्र्यायुषं) इस मंत्रसे लगावे॥ तन्नो इसके स्थानमें तत्ते यह कहना ॥

इसके अनंतर ब्रह्मचारी क्षार ( खारीवस्तु ) लवण मधु ( शहद ) मांसकी निवृत्ति आदिशब्दसे करे अंजन ( सुरमा) उच्छिष्ट--शुक्त ( बासा अन्न ) स्त्री संभोग, हिंसा, निंदा विवाद--और उदयास्तकालमें सूर्यका अवलोकन छोडदे ॥ प्रमाण. याज्ञ० स्मृ०अ--० १ "मधुमांसाञ्जनोच्छिष्टशुक्तस्त्रीप्राणिहिंसनम् । भास्करालोकनाश्लीऌपरीवादादि वर्जयेत्--" और निकालकर जलसे स्नानकरना दण्ड मृगचर्म धारणकरना । वृक्षपर नहीं चढना । विषमकठिनभूमिका लंघन, नग्न-

स्त्रीका दर्शन, स्त्रीसे विषयव्यसन द्यूत चोरी आदि ब्रह्मचारीत्यागदे। प्रमाण- याज्ञ०स्मृ०अध्याय १-प्रथम --श्लो०--३२। ३२। ३४। ३५। ३६। ३७। ३८। ३९। ४०। पर्यंत--यथा " न संशयं प्रपद्येत नाकस्मादप्रियं वदेत् । नाहितं नानृतं चैव नस्तेनः स्यान्नवार्धुषी ॥ दाक्षायणी ब्रह्मसूत्री वेणुमान्सकमण्डलुः । कुर्यात्प्रदक्षिणं देवमृद्गोविप्रवनस्पतीन् ॥ नतुमेहेन्नदीच्छायावर्त्मगोष्ठांबुभस्मसु । नप्रत्यग्न्यर्कगोसोमसंध्यांबुस्त्रीद्विजन्मनः ॥ नेक्षेतार्कं न नग्नां स्त्रीं न च संसृष्टमैथुनाम् ॥ नच मूत्रं पुरीषं वा नाशुची राहुतारकाः ॥ अयंमेवब्रह्मइत्येवं सर्वं मंत्रमुदीरयेत् ॥ वर्षत्यप्रावृतोगच्छेत् स्वपेत्प्रत्यक्शिरा न च॥ष्ठीवनासृक्शकृन्मूत्ररेतांस्यप्सु न निक्षिपेत् । पादौ प्रतापयेन्नाग्नौ नचैनमभिलंघयेत्॥जलं पिबेन्नांजलिना शयानं न प्रबोधयेत् । नाक्षैः क्रीडेन्नधर्मघ्नैर्व्याधितैर्वा न संविशेत् ॥ विरुद्धं वर्जयेत्कर्म प्रेतधूमं नदीतरम् । केशभस्मतुषांगारकपालेषुचसंस्थितिम् । नाचक्षीत धयन्तीं गां नाद्वारेण विशेत्कचित् । न राज्ञः प्रतिगृह्णीयात् लुब्धस्योच्छास्त्रवर्तिनः ॥ इति ॥ तिस दिनका शेषभाग वाणीका संयम कर व्यतीत करे फिर सायंकालकी संध्याकर उस अग्निमें पूर्ववत् पर्युक्षणादिकर वाणीको त्याग न करे ॥ ब्रह्मचारिको प्रथम संध्या सायंकालकी आती है वह-

करे [ प्रमाण—या० स्मृ० अ० १] ( उपास्य पश्चिमां संध्यां हुत्वाग्नींस्तानुपास्यचेति ) परिसमूहनके अंतमें श्रेष्ठ काष्ठ वा गोमयका अग्निमें प्रक्षेप करना ॥ इसप्रकार सायं प्रातः कालकी प्रतिदिन ब्रह्मचारीने संध्या करनी अवश्य है ॥ संध्याके नकरनेका दोष व्यासस्मृतिमें लिखाहै ॥ संध्या येन न विज्ञाता संध्या येनानुपासिता । जीवमानो भवेच्छूद्रो मृतः श्वा चैव जायते ॥ तस्मान्नित्यं प्रकर्तव्यं संध्योपासनमुत्तमम् । तदभावेऽन्यकर्मादावधिकारीभवेन्न हि ॥

अन्यच्च ।

नानुतिष्ठति यः पूर्वां नोपास्ते यश्च पश्चिमाम् ॥ स शूद्रवद्बहिष्कार्यः सर्वस्माद् द्विजकर्म्मणः ॥ यथा पशुर्भारवाही न तस्य भजते फलम् । द्विजस्तथार्थानभिज्ञो न वेदफलमश्नुते॥ इति॥इसलियेब्राह्मणक्षत्रियवैश्य ब्रह्मचारिगृहस्थीवानप्रस्थीको संध्या सायंप्रातः अवश्य करनी चाहिये ॥ अन्यथा अतिदोषभाग होताहै॥ इति श्रीकर्पूरस्थलनिवासी; गौतमगोत्र( शौरि ) अन्वयालंकृतश्रीदैवज्ञ—दुनिचंद्रात्मज—पंडितविष्णुदत्तकृता भाषाटीका समाप्ता ॥

( इति द्वितीयं प्रकरणम् )

ॐस्वस्तिश्रीगणेशायनमः ।

# अथ वेदारम्भः ।

## तृतीयप्रकरणम् ३.

तत्र कृतनित्यक्रियः आचार्यः कुशैर्हस्तपरिमितां भूमिं परिसमुह्य तान्कुशानैशान्यां परित्यज्य गोमयोदकेनोपलिप्य स्रुवमूलेन ( स्फ्येन वा ) उत्तरोत्तरतः प्रागग्रप्रादेशमात्रं त्रिरुल्लिख्य उल्लेखनक्रमेणानामिकांगुष्ठाभ्यां मृदमुद्धृत्य जलेनाभ्युक्ष्य कांस्यपात्रेणाग्निमादाय स्वाभिमुखंनिदध्यात् ॥ पुष्पचंदनतांबूलवस्त्राण्यादाय ॥ ॐ अद्यकर्तव्यवेदारंभहोमकर्मणि कृताऽकृतावेक्षणरूपब्रह्मकर्म कर्तुममुकगोत्रममुकशर्माणं ब्राह्मणमेभिः पुष्पचंदनतांबूलवासोभिर्ब्रह्मत्वेनत्वामहंवृणे । इति ब्रह्माणं वृणुयात् । ॐ वृतोस्मीति प्रतिवचनम् ॥ ॐ यथाविहितं कर्म कुर्वित्याचार्यः करवाणीति तेनोक्ते अग्नेर्दक्षिणतः शुद्धमासनं दत्त्वा

तदुपरिप्रागग्रान्कुशानास्तीर्य ब्रह्माणमग्निप्रदक्षिणक्रमेण भ्रामयित्वा अस्मिन्कर्मणित्वंमे ब्रह्माभवेत्यभिधाय ॥ ॐ भवानीति तेनोक्ते ब्रह्माणमुदङ्मुखंतत्रोपवेश्य प्रणीतापात्रं पुरतः कृत्वा वारिणा परिपूर्य कुशैराच्छाद्य ब्रह्मणो मुखमवलोक्याग्नेरुत्तरतः कुशोपरि निदध्यात् ॥ ततः परिस्तरणं बर्हिषश्चतुर्थभागमादाय आग्नेय्यादीशानांतं ब्रह्मणोऽग्निपर्यंतं नैर्ऋत्याद्वायव्यांतमग्नितः प्रणीतापर्यंतं ततोग्नेरुत्तरतः पश्चिमदिशि पवित्रच्छेदनार्थं कुशत्रयं पवित्रकरणार्थं साग्रमनंतर्गर्भकुशपत्रद्वयम् । प्रोक्षणीपात्रम् । आज्यस्थाली । संमार्जनकुशाः । समिधस्तिस्रः । स्रुवः आज्यं । पूर्णपात्रं पवित्रच्छेदनकुशानांपूर्वपूर्वदिशि क्रमेणासादनीयम्॥ततः पवित्रछेदनकुशैःपवित्रेछित्त्वास पवित्रकरेण प्रणीतोदकं त्रिः प्रोक्षणीपात्रे निधाय । द्वाभ्यामनामिकांगुष्ठाभ्या

मुत्तराग्रे पवित्रे गृहीत्वा । त्रिरुत्पवनम् । त-
तः प्रोक्षणीपात्रं वामहस्ते गृहीत्वा दक्षि-
णहस्तानामिकांगुष्ठाभ्यां त्रिरुद्दिंगनम् ।
ततः प्रणीतोदकेन प्रोक्षणीपात्रमभ्युक्ष्य
प्रोक्षणीजलेन यथासादितवस्तुसेचनं कृ-
त्वा अग्निप्रणीतयोर्मध्ये प्रोक्षणीपात्रं
निदध्यात् ॥ तत आज्यस्थाल्यामाज्यं
निरूप्याधिश्रपणम् । ततः कुशं प्रज्वाल्या
ज्यस्याग्रेश्चोपरि प्रदक्षिणं भ्रामयित्वाऽ
ग्नौ तत्प्रक्षेपः । ततस्त्रिः स्रुवप्रतपनं संमा
र्जनं कुशानामग्रैरंतरतो मूलैर्बाह्यतः स्रुवं
संमृज्य प्रणीतोदकेनाभ्युक्ष्य पुनस्त्रिः प्र
तप्य दक्षिणतो निदध्यात् । तत आज्यम
ग्निप्रदक्षिणं भ्रामयित्वाऽवतार्याग्रे निदध्या
त् । ततः आज्ये प्रोक्षणीवदुत्पवनम् अवे
क्ष्य सत्यपद्रव्ये तन्निरसनं । ततः प्रोक्षणी
वदुत्पवनम् अवेक्ष्य सत्यपिद्रव्ये तन्निर
सनं ततः प्रोक्षण्युत्पवनम् । तत उत्थायो
पयमनकुशानादाय प्रजापतिं मनसा

ध्यात्वा तूष्णीमग्नौ घृताक्ताः समिधस्ति स्रः क्षिपेत्। ततउपविश्य सपवित्रप्रोक्षण्युदकेन प्रदक्षिणक्रमेणाग्निं पर्युक्ष्यप्रणीतापात्रे पवित्रे निधायब्रह्मणान्वारब्धः पातितदक्षिणजानुःसमिद्धतमेग्नौजुहुयात् तत्र प्रथमाहुतिचतुष्टयेनस्रुवावस्थित हुतशेषस्य प्रोक्षणीपात्रेप्रक्षेपः ॥ ॐप्रजापतयेस्वाहा-इदंप्रजापतये । इतिमनसा ॥ ॐइंद्रायस्वाहा–इदमिंद्राय इत्याघारौॐअग्नयेस्वाहा । इदमग्नये ।ॐसोमायस्वाहा–इदं सोमाय ॥इत्याज्यभागौ॥ततःप्राकृतोऽनन्वारब्धकर्तृकोहोमः ॥

कृतनित्यक्रिय आचार्य इति। अर्थात् नित्यक्रिया जो प्रतिदिनकर्तव्य संध्योपासनादि वह जिसने किये हैं ऐसा आचार्य शिष्यको वेदारंभ अर्थात् वेदका अध्ययन करवावे । नित्य कर्मोंमें प्रमाण यथा पाराशरी धर्मस्मृति अध्याय०॥संध्या स्नानं जपो होमो देवतानाञ्च ह्यर्चनम्। स्वाध्यायं वैश्वदेवं च षट् कर्माणि दिने-दिने ॥ अर्थ-संध्या स्नान १ जप २ होम ३ देवपूजा ४ स्वाध्याय वेदका प्रतिदिन अभ्यास५वैश्वदेवबलि६यह

पट्कर्म प्रति दिन कर्तव्यहै ॥ और कुशकंडिकाका अर्थ प्रथम लिख चुकेहैं इसलिये फिर पिष्टपेषण नहीं करते और जो विशेषहै वह लिखतेहैं॥ ब्रह्माकी वर्णीके संकल्पमें इस स्थान ( वेदारंभहोमकर्मणि ) यह ( पद कहना ॥ अघार आहुति वेदिके वायव्य ( वायु ) को णसे अग्निकोणपर्यंत स्रुवसे आहुति पोणि इसको आघार कहतेहैं ॥ और आज्यभाग नैर्ऋतवेदिके को- णसे ईशानकोणपर्यंत स्रुवसे घृतकी आहुतिको आज्य भाग कहतेहैं ॥ इनके अनंतर विना अन्वारब्धके होम करना चाहिये छंदोभ्यः स्वाहेति और कुशकंडिका सर्वत्र एकसी होतीहै इसमेंप्रमाण गृह्यसूत्र प्रथम कां- डमें ( एषएव विधिर्यत्र क्वचिद्धोमः ) अर्थ-यहां कहां होम हो वहां यही विधि जाननी ॥

ॐअंतरिक्षायस्वाहा-इदमन्तरिक्षाय॥ ॐवायवे स्वाहा-इदं वायवे । ॐब्रह्मणे स्वाहा-इदंब्रह्मणे । ॐ छंदोभ्यः स्वाहा इदंछंदोभ्यः ॥ एताः सामा न्याहुतयः ॥ ॐ प्रजापतयेस्वा- हा-इदंप्रजापतये॥इतिमनसा । ॐ देवे- भ्यः स्वाहा ।इदंदेवेभ्यः। ॐ ऋषिभ्यः

स्वाहा-इदंऋषिभ्यः। ॐ श्रद्धायै स्वाहा इदंश्रद्धायै। ॐ मेधायैस्वाहा-इदंमेधायै। ॐसदसस्पतयेस्वाहा-इदंसदसस्पतये। ॐअनुमतयेस्वाहा-इदमनुमतये॥ ततोऽन्वारब्धकर्तृको होमः॥ तत्तदाहुत्यनंतरं स्रुवावस्थितहुतशेषस्य प्रोक्षणीपात्रेप्रक्षेपः।ॐभूः स्वाहा-इदमग्नये।ॐभुवः स्वाहा-इदंवायवे।ॐ स्वः स्वाहा-इदंसूर्याय॥ एतामहाव्याहृतयः॥ यजुः०अ० २१ मंत्र-२ ॥ ॐ त्वन्नो अग्नेवरुणस्य विद्वान्देवस्यहेडो अवं यासिसीष्ठाः। यजिष्ठोवह्नितमः शोशुचानोविश्वाद्वेषाᳬसिप्रमुमुग्ध्यस्मत्स्वाहा-इदमग्नीवरुणाभ्याम्॥

१अंतरिक्ष (आकाश)२ वायु ३ ब्रह्म छन्द (वेद) ४ ऋग् यजु सामाथर्वण॥ यह सामान्य आहुतिहैं ॐ प्रजापतये यह मनसे कहना॥ और देव ऋषि--श्रद्धा मेधा (धारणावती बुद्धि) सदसस्पति अनुमति यह आहुति विना अन्वारब्धके हवन करना॥ भूः इसका

अग्नि, अधिष्ठातृदेवता । भुवका वायु । स्वःका सूर्य देवताहैं । त्वन्नो अग्ने इस मंत्रके साथ विनियोगके अर्थ पीछे लिखाहै इसलिये कुशकंडिकाके मंत्र सत्वन्न इमंमे वरुण तत्त्वायामि येतेशतं अयाश्चाग्ने उदुत्तमं भवतन्नः॥ इनकाभी अर्थ पूर्वोक्त जानना ॥

ॐसत्वनो अग्नेवमोभवोतीनेदिष्ठोऽअ स्याऽउपसोव्व्युष्टौ।अवयक्ष्वनोवरुण रराणोव्वीहिमृडीक महवा नएधिस्वा हा॥इदमग्नीवरुणाभ्याम्॥ ॐअयाश्चाग्ने स्यनभिशस्तिपाश्चसत्यमित्वमयाअसि। अयानोयज्ञंवहास्ययानोधेहिभेषज स्वाहा इदमग्नये॥ॐयेतेशतंवरुणयेसहस्रंय ज्ञियाः पाशावितता महान्तः। तेभिर्नोअ द्यसवितोतविष्णुर्विश्वेमुंचन्तुमरुतः स्व र्काः स्वाहा ॥इदंवरुणायसवित्रेविष्णवे विश्वेभ्योदेवेभ्योमरुद्भ्यःस्वर्केभ्यश्च०॥ ॐउदुत्तमंवरुणपाशमस्मदवाधमंविमं ध्यमश्रंथाय । अथाव्वयमादित्यव्र

१ यह मंत्र यजु० अ० २ मंत्र १२ है।

तेत्वानागसोऽअदितयेस्यामस्वाहा ॥ इदंवरुणाय०॥इतिसर्वप्रायश्चित्तसंज्ञकाः ॥ ॐ प्रजापतयेस्वाहा-इदंप्रजापतये० । इतिमनसा॥इतिप्राजापत्यम्॥ ॐअग्नये स्विष्टकृतेस्वाहा।इदमग्नयेस्विष्टकृते० ॥ इतिस्विष्टकृद्धोमः॥ततःसंस्रवप्राशनम्॥ ततआचम्यॐअद्यकृतैतद्वेदारंभहोमकर्मणिकृताऽकृतावेक्षणरूपब्रह्मकर्मप्रतिष्ठार्थमिदंपूर्णपात्रं प्रजापतिदैवत्यममुकगोत्रायामुकशर्मणेब्राह्मणायब्रह्मणेतुभ्यमहंसंप्रददे ॥ इति दक्षिणांदद्यात् ॥ स्वस्तीतिप्रतिवचनम् ॥

संस्रवप्राशन ( अर्थात् स्रुवसे च्युत घृतका प्राशन जो प्रोक्षणीपात्रमें प्रक्षिप्तहै ) ब्रह्माकी दक्षिणाके संकल्पमें ( वेदारंभहोमकर्मणि ) यह विशेष है ॥ और पूर्ववतहै ॥ स्वस्तिहो यह ब्रह्माजी कहे ॥

ततोब्रह्मग्रंथिविमोकः ॥ ॐ सुमित्रिया नऽआपओषधयः सन्तु । इतिपवित्राभ्यां

प्रणीताजलमानीयतेनशिरः संमृज्य ॐ दुर्मित्रियास्तस्मैसंतुयोऽस्मान्द्वेष्टि यंचव यंद्विष्मः ॥ इतिमंत्रेणऐशान्यां प्रणीतांन्यु ब्जीकुर्यात् । ततस्तरणक्रमेणबर्हिः आनी यघृतेनाभिघार्य क्रमेण हस्तेनैवजुहुयात ॐदेवागातुविदोगातुंवित्त्वागातु मितम नसस्पतइमंदेवयज्ञ९स्वाहावातेधाः स्वा- हा ॥ इतिबर्हिर्होमः ॥ ततः काश्मीरग मनम् । तत इष्टांशकेवेदारंभं गुरुः कार येत् ॥ तत्रक्रमः ॥ ॐभूर्भुवः स्वः । तत्सवि तुर्वरेण्यंभर्गोदेवस्यधीमहि । धियोयोनः प्रचोदयात् ॥ ॐइतिप्रणवांतंपठित्वा ॥ पंक्तिनमस्कारंचकारयित्वा ॥ ॐस मिधाग्निंदुवस्यतघृतैर्बोधयतातिथिम् । अस्मिन्हव्याजुहोतन ॥ सुसमिद्धाय शोचिषेघृतंतीव्रंजुहोतन । इतिकंडिकांतरं वा फक्किकांतरं वा पाठयेत् ॥

ब्रह्मग्रंथिविमोक वहांहे यहां साक्षात् वेदकर्मप्रवीणश्रो त्रिय ब्राह्मण नहो वहां कुशाका ब्रह्मा बनाकर उसमें ब्रह्मा

जीका आवाहनध्यान करना॥उस स्थान कुशाके ब्रह्मा की ग्रंथिका मोचन करना (यथा-प्रमाण-पंचाशता भवेत् ब्रह्मा) अर्थात् ब्राह्मणके अभावमें पचासकुशोंका ब्रह्मा बनाना। वेदारंभ प्रथम ओंकार सप्तव्याहृति पूर्वक गाय त्रीमंत्र पढ समिधाग्निं-इषेत्वोर्जेत्वा-अग्निमीळे पुरोहितं शन्नोदेवी इत्यादि कण्डिकापर्यंत वा फक्किकापर्यंत प्रथम पढ पीछेसे चार वेद वा एक वेद अपनी शाखा अवश्य पढे ॥ प्रमाण-याज्ञ० स्मृतिः अध्याय-१-(उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम् । वेदमध्याप येदेनं शौचाचारांश्च शिक्षयेत् ॥ ) अर्थ-गुरु शिष्यको यज्ञोपवीतधारणकरवाय महाव्याहृतिपूर्वक वेद पढा वे और शौच (पवित्रता )अचारकी शिक्षा करे ॥

ततः सप्रणवं स्वस्ति वाचयित्वा उत्था य फलपुष्पसमन्वितब्रह्मचारिदक्षिणकर स्पृष्टेन घृतपूर्णेन पूर्णाहुतिं दद्यात् । ॐ मूर्द्धानं दिवोऽअरतिं पृथिव्यावैश्वानर मृतऽआजातमग्निम्। कविꣳसम्राजमति थिंजनानामासन्नापात्रंजनयंतदेवाः। इति पूर्णाहुतिः ॥ ततः उपविश्य स्रुवेणभस्मा नीय दक्षिणानामिकाग्रगृहीतभस्मना

त्र्यायुषं जमदग्नेरिति ललाटे । कश्य
पस्य त्र्यायुषं इतिग्रीवायाम् । ॐयद्देवेषु
त्र्यायुषं इति दक्षिणबाहुमूले ॥ ॐतन्नो
अस्तुत्र्यायुषं इतिहृदि । अनेनैव क्रमेण
ब्रह्मचारिललाटादावपि तत्र तत्ते इति
विशेषः ॥ इतिवेदारंभः ॥

ॐस्वस्ति यह कहवाकर ब्रह्मचारिके दक्षिणहस्त
का स्पर्शपूर्वक आचार्य पूर्णाहुति देवे ( पूर्णाहुतिमुत्त
मांजुहोति ) इस श्रुति प्रमाणसे ॥ और मूर्द्धानंदिवः ॥
त्र्यायुषं जमदग्ने इत्यादिके पीछे कुशकंडिकामें अति
विस्तारसे अर्थ लिखाहै वहांसे समझना चाहिये ॥
विस्तारके भयसे वारंवार नहीं लिखते ॥

इति श्रीकर्पूरस्थलनिवासिगौतमगोत्र ( शोरी ) अन्व
यालंकृतदैवज्ञदुनिचंद्रात्मजश्रीयुतपण्डित-विष्णुदत्त-
कृता वेदारंभटीका समाप्ता ॥ शुभमस्तु ॥

( इति तृतीयं प्रकरणं समाप्तम् )

---

( अथ चतुर्थप्रकरणं प्रारभ्यते ).

अथसमावर्तनम् ॥ तत्रशुभेदिने प्रह्वी भूय आचार्य स्नास्यामीति कुमार आ चार्यं भाषते तत्रस्नाहीत्याचार्यः ततो ब्रह्मचारिणि आचार्यसन्निहितदक्षिण दिशि उपविष्टे कृतस्नानादिराचार्यः ॥

वेदारंभके अनंतर समावर्तनसंस्कार लिखते हैं ॥ तत्रेति ॥ समावर्तनसंस्कार उसको कहा जाताहै कि जो वेदोंको और ब्रह्मचर्यको संपूर्ण पीछेसे गुरुजीकी आज्ञाकर गृहस्थ आश्रममें आनेके लिये जो स्नान कियाजाय ॥ इस लिये ऋग्वेद यजुर्वेद सामवेद अथर्वण वेदके पढनेकी और ब्रह्मचर्य धारणकी अवधि कहतेहैं कि जैसे-गृह्यसूत्र पारस्कर कांड--२-अष्टचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यं चरेत् द्वादश द्वादश वा प्रतिवेदं यावद्ग्रहणंवेति । अर्थ-अठतालीस ४८ वर्ष वेद और ब्रह्मचर्यको आचरण करे वा एक वेद प्रति द्वादश १२ वर्ष ब्रह्मचर्य धारण करे वा ग्रहणांतिक अर्थात् जबतक वेद पढाजाय उतना चिर ब्रह्मचर्य धारण करे ॥ और मनुजी भी लिखतेहैं । मनुः-षट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैवेदिकं व्रतम् । तदर्द्धिकं पादिकं वा ग्रहणांतिकमेववा--इति ॥ तथा-याज्ञवल्क्यस्मृति

अध्याय १ प्रथम स्मृति यथा—प्रतिवेदं ब्रह्मचर्यं द्वादशाब्दानि पंच वा । ग्रहणांतिकमित्येके केशांतश्चैव षोडशे ॥ अर्थ— एकवेद प्रति द्वादश १२ वर्ष ब्रह्मचर्य करे वा पंच वा ग्रहणांतिक अर्थात् जबतक वेदकी समाप्ति नहो॥और स्नातक तीन प्रकारके होतेहैं एक विद्यास्नातक द्वितीय ( दूसरे ) व्रतस्नातक तृतीय ( तीसरे ) विद्याव्रतस्नातक ॥ विद्यास्नातक वह होता है जो वेदोंको पढ शीघ्र तीक्ष्ण बुद्धिद्वारा ब्रह्मचर्यको न पूरण कर जो स्नान करे अर्थात् समावर्तन संस्कार कर गृहस्थाश्रममें प्राप्त होजावे॥ व्रतस्नातक वह है जो केवल व्रत ( ब्रह्मचर्य ही ) पूरणकर स्नान करे और वेदकी समाप्ति नाकरे॥विद्याव्रतस्नातक वह है जो वेद और ब्रह्मचर्यको समाप्त कर स्नानकरे—प्रमाण—गृह्यसूत्र पारस्कर २—कांडमें—त्रयः स्नातका भवंति । विद्यास्नातको व्रतस्नातको विद्याव्रतस्नातक इति। समाप्य वेदमसमाप्य तं यः समावर्तते स विद्यास्नातकः समाप्य व्रतमसमाप्य दं समावर्तते स व्रतस्नातक उभय ँ समाप्य यः समावर्तते स विद्याव्रतस्नातक इति ॥ ॥ यदि समग्र चार वेद नापढे जांय तो अपनी शाखाका वेद पढे यदि वह भी पढा ना जा तो संहिता मात्र पढे। यदि इसमें भी असमर्थ होतो संस्कार संध्या अर्थात् ब्राह्मण क्षत्रिय

वैश्यको जो अवश्य कर्तव्य हैं वह तो यत्नसे पढना चाहिये ॥ यह गौण पक्ष है॥ (तत्रेति) वेदादि पढ शुभ-दिनमें ( प्रह्वी भूय-- ) हे गुरो मैं स्नान करों भो शिष्य स्नानकर इस वाक्यके अनंतर आचार्यकी दक्षिणकोणमें स्थित हो स्नान करे। प्रमाण--याज्ञवल्क्यस्मृति अध्याय १ प्रथम--( गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया । वेद व्रतानि वा पारं नीत्वा ह्युभयमेव वा ) इति ॥

कुशैर्हस्तमात्रां भूमिं परिसमुह्य तानैशान्यां परित्यज्य गोमयोदकेनोपलिप्य स्रुवमूलेन स्फ्येन वोत्तरोत्तरक्रमेण त्रिरुल्लिख्य उल्लेखनक्रमेणोद्धृत्य जलेनाभ्युक्ष्य कांस्येनाग्निमानीयप्रत्यङ्मुखं निदध्यात । ततःपुष्पचंदनतांबूलवासांस्यादाय ॐ अद्यामुकस्य कर्तव्यसमावर्तनहोमकर्मणि कृताऽकृतावेक्षणरूपब्रह्मकर्मकर्तुममुकगोत्रममुकशर्माणंब्राह्मणमेभिः पुष्पचंदनतांबूलवासोभिः ब्रह्मत्वेनत्वामहं वृणे।वृतोस्मीतिप्रतिवचनम्॥ यथाविहितं कर्मकुर्वित्याधाय । ॐ

करवाणीतितेनोक्ते अग्नेर्दक्षिणतः शुद्ध
मासनं दत्त्वा तदुपरि प्रागग्रान् कुशा
नास्तीर्य अस्मिन्कर्मणि त्वं मे ब्रह्माभ
वेत्यभिधाय ॐ भवानीति तेनोक्ते
ब्रह्माणमुदङ्मुखं तत्रोपवेश्यततः प्रणी
तापात्रं पुरतः कृत्वा वारिणा परिपूर्य
कुशैराच्छाद्य ब्रह्मणो मुखमवलोक्याऽ
ग्नेरुत्तरतः कुशोपरि निदध्यात् ॥

कुशकंडिकाका अर्थ पूर्व लिखाहै ॥ ब्रह्माकी वर्णीमें ( अस्य कुमारस्य समावर्तनहोमकर्मणि ) यह कहना ॥ प्रणीतापात्रका लक्षण लिखतेहैं ॥ वरण वृक्षका द्वादश ( १२ ) अंगुल दीर्घ और चार अंगुल विस्तारमें खोदा हुआ प्रणीतापात्र होताहै ॥

ततः परिस्तरणम् । बर्हिषश्चतुर्थभागमा
दायाग्नेयादीशानांतंब्रह्मणोऽग्निपर्यन्तं नै
ऋत्याद्वायव्यांतं अग्नितः प्रणीतापर्यंतं
ततोऽग्नेरुत्तरतः पश्चिमदिशिपवित्रच्छे
दनार्थं कुशत्रयम् पवित्रकरणार्थंसाग्र
मनन्तर्गर्भकुशपत्रद्वयं प्रोक्षणीपात्रमाज्य

स्थालीसंमार्जनार्थं कुशाः उपयमन
कुशाः समिधस्तिस्रः स्रुवःआज्यं पूर्व
पूर्वदिशि क्रमेणासादनीयम् । ततःपवित्र
च्छेदनकुशैः पवित्रेछित्त्वासपवित्रकरेण
प्रणीतोदकंत्रिः प्रोक्षणीपात्रेनिधायाना
मिकांगुष्ठाभ्यां पवित्रे गृहीत्वात्रिरुत्पूय
प्रोक्षणीपात्रंवामकरेणाऽदायाऽनामिकां
गुष्ठगृहीतपवित्राभ्यां तज्जलं किंचित्त्रिः
प्रक्षिप्य प्रणीतोदकेन प्रोक्षणीमभ्युक्ष्य
प्रोक्षणीजलेनयथासादितवस्तून्यभिषि
च्याग्निप्रणीतयोर्मध्ये प्रोक्षणीपात्रंनिद
ध्यात् ॥ ततआज्यस्थाल्यामाज्यनि
र्वापः ॥ अधिश्रपणम् ॥ ततस्तृणं प्रज्वा
ल्याज्यस्याग्नेश्चोपरि प्रदक्षिणं भ्राम
यित्वा वह्नौ तत्प्रक्षिप्यस्रुवं त्रिः प्रतप्य
संमार्जनकुशानामग्रैरंतरतोमूलैर्बाह्यतः
स्रुवं संमृज्य प्रणीतोदकेनाभ्युक्ष्य पुनः
प्रतप्य स्वस्य दक्षिणतो निदध्यात् ।
तत आज्यमग्नि प्रदक्षिणं भ्रामयित्वाऽ

वतार्यत्रिःप्रोक्षणीवद्रुत्पूयावेक्ष्य सत्यप
द्रव्ये तन्निरसनं कृत्वापुनः पूर्ववत्प्रोक्षण्यु
त्पवनं ततउत्थायोपयमनकुशान् वाम
हस्ते कृत्वा प्रजापतिं मनसा ध्यात्वा
तूष्णीमग्नौ घृताक्ताः समिधस्तिस्रःक्षिपे
त्। तत उपविश्यसपवित्रप्रोक्षण्युदकेन
प्रदक्षिणक्रमेणाग्निपर्युक्ष्यप्रणीतापात्रेनि
धाय पातितदक्षिणजानुः समिद्धतमेऽ
ग्नौब्रह्मणान्वारब्धः स्रुवेणाज्याहुतीर्जुहु
यात्। तत्रप्रथमाहुतिचतुष्टये प्रत्याहुत्य
नन्तरं स्रुवावस्थितहुतशेषस्यप्रोक्षणीपा
त्रे प्रक्षेपः। ॐ प्रजापतये स्वाहा–इदंप्र
जापतये० इतिमनसा। ॐ इंद्रायस्वाहा
इदमिंद्राय० इत्याघारौ। ॐअग्नयेस्वाहा
इदमग्नये ॥ ॐ सोमायस्वाहा-इदंसोमा
य०॥इत्याज्यभागौ॥ततोऽन्वारब्धकर्तृ
कहोमः॥ॐअंतरिक्षायस्वाहा । इदमंत
रिक्षाय० ॥ ॐवायवेस्वाहा–इदंवायवे०
ॐ ब्रह्मणेस्वाहा–इदंब्रह्मणे० । ॐ छंदो

भ्यः स्वाहा-इदंछंदोभ्यः०॥ ॐ प्रजाप-
तयेस्वाहा- इदंप्रजापतये०इतिमनसा॥
ॐदेवेभ्यः स्वाहा इदंदेवेभ्यः० ॥ ॐऋ-
षिभ्यः स्वाहा-इदमृषिभ्यः०॥ ॐश्रद्धा
यैस्वाहा इदंश्रद्धायै० ॥ॐमेधायैस्वाहा
इदंमेधायै ॥ ॐ सदसस्पतयेस्वाहा-
इदंसदसस्पतये० ॥ ॐअनुमतयेस्वाहा
इदमनुमतये० ॥ ततोब्रह्मणान्वारब्धो
जुहुयात ॥ अत्राहुतिदशतयेतत्तदाहु
त्यनंतरंस्रुवावस्थिताज्यस्यप्रोक्षणीपात्रे
प्रक्षेपः ॥ॐभूः स्वाहा इदमग्नये० ॥ ॐ
भुवः स्वाहा-इदं वायवे० । ॐस्वःस्वा
हा-इदंसूर्याय० ॥ एतामहाव्याहृतयः॥

(१) प्रोक्षणीपात्रका लक्षण देवलोक्त लिखतेहैं ॥
यथा-प्रणीतानैर्ऋते भागे तद्वद्वायव्यगोचरे । वारणं
संविजानीयात्सर्वकर्मसुकारयेत् ॥ सर्वसंशोधनार्थाद
पात्रं वारणमिष्यते । द्वादशाङ्गुलिदीर्घं च करतलो
न्मितखातकम्।पद्मपत्रसमाकारं मुकुलाकारमेववा। इति
(२) आज्यस्थालीका लक्षण-यथा व्यासस्मृतौ-
तैजसीमृन्मयीवापि ह्याज्यस्थाली प्रकीर्तिता द्वादशां

गुलविस्तीर्णा प्रादेशोच्चाप्रमाणतः ) अर्थ-तैजस अर्थात् कांस्यरजतआदिधातुकी बनीहुई वा मृत्तिकासे वनीहुई द्वादश १२-अंगुली विस्तृत और प्रादेशमात्र ऊँची आज्यस्थाली होतीहै ॥

( ३ ) चरुस्थालीका लक्षण यथा-चरुस्थाली तथैवापि दीर्घोच्चा तु प्रमाणतः।नानयोरन्तरंयस्माद्द्रव्य संस्करणार्थका इति ॥ अर्थ ॥ आज्यस्थालीवत् चरुस्थालीभी प्रमाणसे दीर्घ और ऊँची होतीहै इनका भेद कुछ नहीं जिस लिये यह द्रव्य संस्कारके वास्ते है.

( ४ ) संमार्जनकुशामें प्रमाण- स्रुवसंमार्जनार्थं तु कुशत्रयमुदीरितम् । इति व्यासस्मृतौ ॥

( ५ ) उपयमन कुशामें प्रमाण यथा-उपयमनार्थेमाख्यातास्त्रिषण्नवमिताः कुशाः । वेणीरूपानिरोधार्थौ निरोधे वहुभिः सुखम् ॥ इति भृगुवचनम्॥अर्थ-उपयमनके लिये त्रि ३ षट् ६ नव ९ परिमित कुशा वेणीरूपनिरोधके लिये कहीहै ॥

( ६ ) समिधस्तिस्रः-प्रमाण. पराशरस्मृतौ-पालाशजं प्रादेशमात्रं दैर्घ्येण स्थूलता । कनिष्ठिकासमंध्यात्वाविधिमग्नौ क्षिपेच्चतत् ॥ अर्थ-पलाशकी प्रादेश मात्र कनिष्ठिका समस्थूल ब्रह्माजीका ध्यानकर अग्निमें क्षेपकरे ॥

ॐ त्वन्नो अग्ने वरुणस्य विद्वान् देवस्य हेडोऽअवं यासिसीष्ठाः। यजिष्ठो वह्नि तमः शोशुचानो विश्वाद्वेषां सिप्रमु मुग्ध्यस्मत्स्वाहा। इदमग्नीवरुणाभ्याम् (१) ॐसत्वन्नो अग्ने वमो भवोतीनेदि ष्ठोऽअस्या उषसो व्युष्टौ। अवं यक्ष्वनो वरुण रराणोव्वीहि मृडीक सुहवो नएधि स्वाहा॥ इदमग्नीवरुणाभ्यां ॐ अयाश्चाग्नेस्यनभिशस्तिपाश्चसत्व मित्व मया असि। अयानो यज्ञंवहास्य या नोधेहि भेषज स्वाहा। इदमग्नये॰॥ ॐ येते शतं वरुणयेसहस्रंयज्ञियाः पाशा वि तता महांतः। तेभिर्नो अद्यसवितोत वि-ष्णुर्विश्वे मुंचंतु मरुतः स्वर्काः स्वाहा। इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो मरुद्भ्यः स्वर्केभ्यश्च॥ ॐउदुत्तमं वरुण पाशमस्मदवाधमंविम ध्यम श्रथाय।

अथांव्वयमादित्यव्रतेतववानागसोऽअदिं तयेस्यामस्वाहा । इदंवरुणाय० ॥ इति सर्वप्रायश्चित्तम् ॥

त्वन्नो अग्ने यहमंत्र शुक्ल यजुर्वेद अध्याय २१ मंत्र ३ है॥और सत्वन्नो अग्ने यह मंत्र शुक्ल यजुर्वेद अध्याय २१ मंत्र४ है ॥ अयाश्चाग्ने यह मंत्र शुक्लयजुर्वेद अध्याय मंत्र है. येतेशतं यह मंत्र शुक्ल यजुर्वेद अध्याय. मंत्र. है उदुत्तमं वरुण यहमंत्र शुक्ल यजुर्वेद अध्याय १२ मंत्र १२ है यह सर्वप्रायश्चित्त निवृत्तिमें आहुति हैं ॥

ॐप्रजापतये स्वाहा[१]इदं प्रजापतये० । इतिमनसा इतिप्राजापत्यम् । ॐअग्नये स्विष्टकृतेस्वाहा–इदमग्नयेस्विष्टकृते० । इति स्विष्टकृत ॥ ततः संस्रवप्राशनम् । तत आचम्य ॥ ॐ अद्य कृतैतत्समावर्तनहोमकर्मणि कृताऽकृतावेक्षणरूपब्रह्मकर्मप्रतिष्ठार्थमिदंपूर्णपात्रं प्रजापतिदैवत्यममुकगोत्रायामुकशर्मणे ब्राह्मणाय ब्रह्मणे दक्षिणां तुभ्यमहं संप्रददे॥

---

१ यजु० अध्याय २१ मंत्र ३ ।

इति दक्षिणां दद्यात्।ॐस्वस्तीति प्रति
वचनम्॥ ततो ब्रह्मग्रंथिविमोकः। ततः
पवित्राभ्यां प्रणीताजलेन ॐ सुमित्रि
यानऽआप ओषधयः सन्तु ॥इतिमंत्रेण
शिरः संमृज्य॥ ॐ दुर्मित्रियास्तस्मै
संतुयोऽस्मान्द्वेष्टि यं च वयं द्विष्मः॥
इतिमंत्रेणैशान्यां प्रणीतान्युब्जीकरणम्॥

(७) स्रुव वा ब्रह्महस्तका लक्षण. यथा—कात्यायनः—स्रुवस्तु ब्रह्महस्ताख्यः स्कंधांतो बाहुरुच्यते॥ स्वाहाकारस्वधाकारवषट्कारसमन्वितः॥ दण्डाकारो भवेन्मूले स्यादरत्न्यां तु तत्समः। सकङ्कणस्तु दण्डाग्रे हस्ताकारस्ततो बहिः॥ अष्टांगुलीपरीमाणं तन्मूलाभ्यंतरेत्त्यजेत्॥ दशांगुलीपरीमाणं तन्मूलाभ्यंतरे त्यजेत्॥ दशांगुलीपरीमाणमारभ्यकङ्कणावधि। हस्तमात्रं भवेद्धस्तःस्रुव इत्यभिधीयते॥ खादिरः शैंशिपो वापि ह्यन्यो वा पुण्यवृक्षजः। धावकोपि समाख्यातो होमार्थं मुनिभिः कृतः। इति॥

(८) घृतलक्षणम्—तथाच स्मृतिः—गव्यमाज्यंजुहुयात्तदभावे माहिषं स्मृतम्॥ तथा च श्रुतिः॥ गव्यमाज्यं जुहुयात्तदभावेमाहिषेयमिति॥

